समापयेत् । ततोहोमदशांशेनतर्पणंतद्दशांशेनमार्जनंकृत्वाविशेषसत्कारेणपीठस्थंदेवंशिवंसंपूज्यपीठंद
द्यात् ॥ तत्रमंत्रः ॥ पीठंगृहाणभूदेवशिवशक्त्यादिसंयुतम् ॥ वांछितार्थंप्रयच्छाद्युदेहिमेव्रतजंफलम् ॥
इति ॥ ततोव्रतपूर्त्यर्थेगांचदत्त्वामार्जनेनदशांशतोवासदन्नेनब्राह्मणान्संतर्प्यव्रतपूर्णतांवाचयित्वाऽऽशिषो
गृहीत्वेष्टजनैःसहभुंजीत ॥ अत्रत्रैवर्णिकानामेवाधिकारः ॥ स्त्रीशूद्राणांतुपूजयैवोद्यापनसिद्धिरिति
लैंगात्॥ इतिशैवागमोक्तपार्थिवलिंगोद्यापनम्॥ अथपार्थिवगणेशोद्यापनं रुद्रयामले॥महादेवउवाच॥
यथापार्थिवलिंगंतुसर्वसिद्धिविधायकम् ॥ तथाविघ्नेश्वरंदेवंपार्थिवंसर्वकामदम् ॥ निर्विघ्नं
जायतेकार्यंसर्वांसिद्धिंपुमाँल्लभेत् ॥ षट्कर्माणितथाचक्षेशृणुष्वैकमनाभव ॥ रक्तोपचारैःसिंदूरैरक्त
माल्यांबरैस्तथा ॥ जपापुष्पैः करवीरैः कुसुमैः क्षीरपायसैः ॥ संपूज्यवश्यतामेतियंयांचिंतयतेनरः ॥
शुक्लमाल्यैःशुक्लवस्त्रैरोदनैर्दधिमिश्रितैः ॥ मालतीकुसुमैर्धूपैर्दशांगैःक्षांतिलब्धये ॥ कवितायाःपटुत्वंच
जायतेनात्रसंशयः॥ मोहनेमधुभिःस्नाप्यमधुपायसमर्पयेत्॥असितैःकुसुमैःपूज्योदमनेनासितागुरुम्॥
समारोप्यार्चयेद्भक्त्यात्रैलोक्यमोहयेत्क्षणात् ॥ स्तंभनेनिशयायुक्तैरुपचारैः समर्पयेत् ॥ आढकीभक्त
नैवेद्यैःश्वेतदूर्वाभिरेवच ॥ कारयेन्निंबजरसंधूपंशत्रोस्तुतद्भवेत् ॥ मारणेमाहिषेचर्मण्यास्थायासितकंब

धौ ॥ शिवपूजाविधातव्यापूर्वंपूर्वंमहाफलम् ॥ समापनकालमाह ॥ कार्तिकादिशुभेमासेलिंगानांचस
मापनम् ॥ चतुर्दशीदर्शयुक्ताह्यष्टमीनवमीयुता ॥ समाप्तिस्तत्रकर्तव्यारौद्रेयुक्तेपुनर्वसौ ॥ अन्येष्वपिच
कालेषुशुभेषुचसमापनम् ॥ अथोद्यापनम् ॥ तिथ्यादिसंकीर्त्याऽमुककामनामुद्दिश्यकृतानांपार्थिवलिं
गानांसंपूर्णफलावाप्तये तदुद्यापनंकरिष्ये ॥ इतिसंकल्प्य पुण्याहवाचनादिविधाय वृताचार्यः सर्षपा
दिनाभूतान्युत्सार्यद्वारपूजांकुर्यात् । चतुर्द्वारोपशोभितमंडपस्येशानभागेस्थित्वा । सदाशिवमंडपाय
नमः प्राग्द्वारपार्श्वयोः नंदिनेनमः महाकालाय० चिच्छक्त्यैन० मायाशक्त्यै० द्वारश्रियै० वास्तुपुरु
षाय० दक्षिणपार्श्वयोः गणेशाय० वृषभाय० । चिच्छक्त्यादिपूर्ववत् । पश्चिमद्वारपार्श्वयोः भृङ्गि
णे० स्कंदाय० । शक्त्यादिपूर्ववत् । उत्तरद्वारपार्श्वयोः रिटिनेन० चंडीश्वराय० । शक्त्यादिपू
र्ववत् । ततः पश्चिमद्वारेणप्रविश्यवेद्याःपश्चिमतः उपविश्यलिंगतोभद्रेब्रह्मादिदेवतास्थापनपूर्वकं
कलशंप्रतिष्ठाप्य तदुपरिदेवंस्थापयेत् । तत्रादौन्यासंकुर्यात् । ललाटे शिवायनमःकंठेरुद्राय०
नाभौ ईशानाय० जान्वोः० शंकराय० पादयोः सदाशिवाय० ॥ ततःअश्मन्नूर्जमित्यनुवाके
नपयोधारयालिंगस्याभ्युत्तारणंकुर्यात् ॥ लिंगप्रमाणंतुप्रत्यहंयावन्मानंमृल्लिंगंक्रियतेतावन्मानंतदर्द्धं

तदर्द्धंवासौवर्णंराजतंवाकुर्यात् । तत प्राणप्रतिष्ठांकुर्यात् । पंचामृताभिषेकंचकृत्वाततःकलशेननमःशंभ वेचमयोभवेचनमःशंकरायचमयस्करायचेतिमंत्रेणपंचाक्षरेणवालिंगं संस्थाप्यतद्वामभागेगौरीर्मिमा येति । ॐ नमोभगवत्यैउमादेव्यैशिवप्रियायैनमइत्यागममंत्रेणवाहैमींगौरींप्रतिष्ठाप्यदक्षिणभागे । तत्पुरुषायविद्महेवक्रतुंडायधीमहि ॥ तन्नोदंतिःप्रचोदयात् ॥ इतिहैमंगणेशंतद्दक्षिणे । तत्पुरुषायवि द्महेमहासेनायधीमहि ॥ तन्नःषण्मुखःप्रचोदयात् । इतिहैमंस्कंदं पुरतोराजतंवृषभमृषभंमेतिमंत्रेणसं स्थाप्यपरितोलोकेशान्प्रतिष्ठाप्यपूजयेत् ॥ ध्यानम् ॥ मंगलायतनंदेवंभवंकांतंमनोरमम् ॥ ध्यायेत्क ल्पतरोर्मूलेसमासीनंसहोमया ॥ सहस्राणिसहस्रशइतिध्यात्वाॐनमोभगवतेरुद्रायेतिलिंगोपरि अक्ष तान्क्षिपेत् । नमस्तारायेत्यासनं० नमःशंभवइतिपाद्यं नमःशंकरायेत्यर्घ्यं नमःशिवायेत्याचमनीयं नमस्तीर्थ्यायेतिरुद्रसूक्तैश्चस्नानं भवंदेवंतर्पयामि शर्वं० रुद्रं० पशुपतिं० उग्रं० महांतं० भीमं० ईशानं० मानस्तोकेतिवस्त्रं० नमोहिरण्यबाहवइत्युपवीतं नमोवृद्धायेतिभूषणं नमःश्वभ्यइतिगंधं० नमःसोमाये त्यक्षतान् नमःपार्यायचेति पुष्पं नमःकपर्दिनेचेतिधूपं नमआशवेचेतिदीपं० नमोबभ्लुशायचेतिनैवेद्यं नमःपर्ण्यायचेतितांबूलं नमोदुंदुभ्यायचेतिदक्षिणां नमइरिण्यायचेत्यारार्तिक्यं ततोलिंगोपरिनमः

शर्वायचपशुपतयेचेत्यारभ्य नमोबृहतेचवर्षीयसेचेत्यंतेनपुष्पांजलिः एषतेरुद्रइतिप्रदक्षिणा नमोरुद्रेभ्यइतिनमस्कारः ॥ ततःस्तोत्रंपठेत् ॥ नमॐकाररूपायनमोऽक्षरवपुर्धृते ॥ नमोनादात्मनेतुभ्यंनमोबिंदुकलात्मने ॥ अलिंगलिंगरूपायरूपातीतायतेनमः ॥ त्वंमातासर्वलोकानांत्वमेवजगतः पिता ॥ त्वंभ्राතात्वंसुहृन्मित्रंत्वंपितात्वंपितामहः ॥ नमस्तेभगवन्रुद्रभास्करामिततेजसे ॥ १ ॥ नमोभवायदेवायउमयासहितायच ॥ सर्वायक्षितिरूपायसदासुरभिणेनमः ॥ पशूनांपतयेचैवकामिनेऽमिततेजसे॥ भौमायव्योमरूपायशब्दरूपायतेनमः ॥ महादेवायसोमायह्यमृतायनमोनमः ॥ उग्रायययजमानायनमस्तेकर्मयोगिने ॥ इतिस्तुत्वाक्षमापयेत् ॥ ॐ अंगहीनंक्रियाहीनंविधिहीनंमहेश्वर ॥ पूजितोऽसिमयादेवतत्क्षमस्वजगत्पते ॥ इतिक्षमाप्यपुराणपठनादिनारात्रिंनिनयेत् ॥ रात्रौप्रारंभः ॥ तद्दिनेउपोषणंप्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं सोमंशिवंकृतलिंगद्वादशांशेनवापायसमधुशर्कराज्यतिलाक्षतबिल्वपत्रशतपत्रपत्रद्रव्याष्टकेनकेवलपायसेनवा नमःशंभवेचेतिमंत्रेणपंचाक्षरेणवायक्ष्ये । तथागौरींगणेशंषण्मुखंचउक्तद्रव्यैः प्रतिद्रव्यंदशाहुतिभिः वृषभंलोकेशान्ब्रह्मादिदेवताश्चदशदशतिलाहुतिभिःद्वारदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ शेषेणस्विष्टकृतमित्यादि होमंसमाप्यपूर्णाहुत्यादिकर्मशेषं

शिवम् ॥ मृल्लिप्तहस्तएवाशुसंक्षालितकरेथवा ॥ पंचाष्टषोडशप्रोक्ताद्वात्रिंशदुपचारकाः ॥ यस्तुपूजय
तेभक्त्यालिंगंत्रिभुवनेश्वरम् ॥ सस्वर्गराज्यमोक्षाणांक्षिप्रंभवतिभाजनम् ॥ आदौकृत्वागणेशंचलिंगंकु
र्यात्ततःपरम् ॥ पश्चाच्छक्तिंततः स्कन्दंलिंगान्यथयथाविधि ॥ हरोमहेश्वरः शंभुःशूलपाणिःपिनाक
धृक् ॥ शिवःपशुपतिश्चैवमहादेवइतिक्रमात् ॥ मृदानयनसंघट्टप्रतिष्ठाह्वानमेवच ॥ स्नपनंपूजनंचैव
क्षमस्वेतिविसर्जनम् ॥ अथकामनापरत्वेनैकादशप्रकाराः ॥ तदुक्तंपार्थिवचिंतामणौ ॥ ऋणमोचन
कामः एकशतदिनपर्यन्तंप्रत्यहमेकंलिंगंकृत्वाबृहतीपुष्पंघृतनैवेद्यमनृणाअस्मिन्नतिऋचमष्टोत्तरंजपेतृऋ
णान्मुक्तोभवति ॥ १ ॥ पुत्रकामस्तुद्विशतपर्यंतंप्रत्यहंलिंगद्वयंपंचामृताभिषेकः मल्लिकापुष्पंगुडौदनंनै
वेद्यं काण्डात्काण्डात्प्ररोहंतिइतिअष्टोत्तरशतजपः याशतेनप्रतनोषीत्यनेनाष्टोत्तरशतदूर्वार्पणंपुत्रोभवति
॥ २ ॥ कन्याकामस्तुत्रिशतदिनंप्रत्यहंलिंगत्रयं करवीरपुष्पं शर्करानैवेद्यं पावीरवीकन्येतिमंत्रेणा
ष्टोत्तरशतंजपेत् याशतेनेत्यष्टोत्तरशतदूर्वार्पणंकन्याभवति ॥३॥ द्रव्यकामस्तुचतुःशतदिनपर्यन्तंप्रत्य
हंचत्वारिलिंगानिकृत्वाकिंशुकपुष्पंकदलीफलनैवेद्यं श्रीसूक्तंदशवारंप्रत्यहंपठेत् द्रव्यागमोभवति॥४॥
विवाहकामःप्रत्यहंपंचलिंगानिपञ्चशतदिनपर्यन्तंकृत्वा चंपकपुष्पं पायसनैवेद्यंगौरीर्मिमायतिऋच

मष्टोत्तरशतंजपेत्॥५॥कलहनिवृत्तिकामःत्रिंशद्दिनपर्यन्तंप्रत्यहंषड्लिंगानि बकुलस्यपुष्पं मधुनैवेद्यंसुं चामित्वेतिसूक्तंदशधाजपेत् ॥६॥ तीर्थयात्राकामः पंचाशद्दिनपर्यन्तंप्रत्यहं सप्तलिंगानिशतपत्रपुष्पंद ध्योदनंनैवेद्यंरुद्रैकादशिनीजपः ॥७॥ विद्याकामः त्रिंशद्दिनपर्यन्तंप्रत्यहमष्टौलिंगानि बिल्वपत्रं लड्डु कनैवेद्यंयच्छंदसामृषभोविश्वरूपइत्यनुवाकंदशधाजपेत् ॥ ८ ॥ अपमृत्युहरणकामःएकशतदिनपर्यंतंप्र त्यहंनवलिंगानि धत्तूरपुष्पं दध्योदनंनैवेद्यं त्र्यंबकमितिमंत्रमाद्यंतेप्रणवमष्टोत्तरसहस्रंजपेत्॥९॥दूरगत सुहृदागमनकामः वर्षमेकंप्रत्यहं दशलिंगानिकांचनोद्भवंपुष्पमपूपनैवेद्यं योरुद्रोअग्नाविति अष्टोत्तरशतं जपेत् ॥ १० ॥ सर्वदारिद्र्यनिवृत्तिकामःषण्मासंप्रत्यहमेकादशलिंगानि रक्ताब्जंद्रोणपुष्पं सर्वान्ननैवेद्यं गोघृताक्तं नमोहिरण्यबाहवइतिमंत्रमष्टोत्तरशतंजपेत् ॥ ११ ॥ इत्येकादशप्रकाराः ॥ कारागृहमोचने विशेषः ॥ कारागृहमोक्षकामएकविंशतिदिनपर्यंतमेकोत्तरवारवृद्ध्यालिंगानिकृत्वाद्वाविंशतिदिनमा रभ्य पुनरेकैकह्रासेनलिंगानिकृत्वायावल्लिंगानिभवंति तावत्प्रत्यहंरुद्रैकादशिन्याऽभिषेकः। पलाश पुष्पं दधिघृतमधुमिश्रान्नंनैवेद्यमष्टसहस्रं त्वरितरुद्रंजपेत् निगडान्मुक्तोभवति ॥ लिंगसंख्ययाफलभे दमाह। एकंपापहरंलिंगंद्विलिंगंश्रीकरंत्रिलिंगंसर्वकामदम्। विद्याकामेसहस्रंस्त्रीकामेपंचशतंपुत्रकामेपं

चदशायुतानि कन्याकामेऽयुतत्रयं भूकामेसहस्रंरूपकामेत्रिसहस्रं राज्यकामेलक्षं मारणेसप्तसहस्रमुच्चा
टनेपंचसहस्रम्॥स्तंभनेत्रिसहस्रं जारणेद्विसहस्रं कारागृहमोचनेऽयुतम् । निगडमोचनेसार्द्धमयुतं डाकि
न्यादिभयेपंचशतं राज्यभयेअयुतं दारिद्र्यमोचनेपंचसहस्रं सर्वकामेसप्तायुतानि मोक्षकामेलक्षं परम
सायुज्यकामेकोटिः । सौवर्णलिंगंसौभाग्यकरंराजतंयशस्करम् । ताम्रमयंपुष्टिकरम्।कांस्यमयंकीर्तिकर
म् । लोहमयंशत्रुमारणकरम्।सीसमयमायुःकरम् । पाषाणमयंपुण्यकरम् । काश्मीरंश्रीकरम् । मारकतं
शांतिकरम्।स्फाटिकंबहुस्वामित्वकरम् । इंद्रनीलमयंपोषणकरम्।मुक्तामयंश्रेयस्करम् । पारदंसर्वसिद्धि
करं चंदनजंज्वरनाशकरं कर्पूरजंशांतिकरं गोमयजंसर्वरोगहरं भस्मोद्भवंमोक्षकरम् । हारिद्रंप्रीतिवर्द्धनम्।
कस्तूरीभवंसुगंधकरं नवनीतजंकीर्तिकरं दधिजंलक्ष्मीकरंदुग्धजंसुखकरं शर्करोत्थंपुत्रकरं लवणोत्थंस
र्वजनवशकरं कृष्णतिलोद्भवंशिवलोकप्रदम् ॥ उक्तेष्वेतेषुलिंगेषुपार्थिवंक्षिप्रसिद्धिदम् ॥ कृतेमणिमयं
लिंगंत्रेतायांहेमसंभवम् ॥ द्वापरेपारदंश्रेष्ठंपार्थिवंतुकलौयुगे ॥ इति ॥ अथारंभकालःशैवागमे॥कार्तिके
मार्गशीर्षेवामाघेवैशाखसंज्ञिते ॥ श्रावणेबहुलेपक्षेव्रतस्याचरणंभवेत् ॥ स्थलविशेषमाह ॥ पुण्यारण्येन
दीतीरेपर्वताग्रेशिवालये ॥ श्रीवृक्षाश्वत्थतुलसीधात्रीछायायुतेवने ॥ गोष्ठगृहेवादेवाग्निसूर्यगोविप्रसन्नि

अत्रप्रधानं पूज्यदेवंघृताक्ततिलद्रव्येणसहस्राहुतिभिर्मंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततः पीठंसु वर्णवर्तिसंयुक्तरौप्यस्थदीपंघृतपूरितकांस्यपात्रसहितंब्राह्मणायदत्त्वागांचप्रतिपाद्यद्विजान्भोजयेत् ॥ इति श्रीमच्चित्तपा० व्रतोद्यापनकौमुद्यां चतुर्विधलक्षवर्तिकाव्रतोद्यापनंकर्पूरलक्षदीपविधानंपृथक्पृथग्ल क्षदीपविधानंचसमाप्तम् ॥ अथपार्थिवलिंगोद्यापनम् ॥ लैङ्गेरुद्रयामले भविष्येशैवागमेचोक्तम् ॥ तत्र विधिः ॥ सहस्रंवाथलक्षंवाकोटिंवाथविधानतः ॥ लिंगानांपूजयित्वातुसर्वान्कामानवाप्नुयात् ॥ मल्लिं गंपार्थिवंश्लक्ष्णंभुक्तिमुक्तिकरंपरम् ॥ त्रिसंध्यंयोऽर्चयेल्लिंगंकृत्वाबिल्वेनपार्थिव ॥ एकंदशशतंवापिस र्वाभीष्टमवाप्नुयात् ॥ शुद्धप्रदेशसंभूतांमृदमाहृत्य यत्नतः ॥ शुद्धेनवारिणाभ्युक्ष्यसुसंघट्यतुतत्पुनः ॥ लिंगानांसंख्ययाकुर्यात्पृथक्पिंडान्यथाक्रमम् ॥ पलद्वयान्नकर्तव्यंन्यूनंलिंगंसदैवहि ॥ अखंडंतुचरं लिंगंद्विखंडंस्थावरंस्मृतम् ॥ लिंगमादौविधायाथपिंडिकांरचयेत्ततः ॥ पक्वजंबूफलाकारंलिंगंकुर्यान्म नोरमम् ॥ वर्तुलंचतुरस्रंवासमंपीठद्वयंशुभम् ॥ दर्शनादेवलिंगस्यदेवगंधर्वदानवाः ॥ तत्क्षणंपूजयंत्या शुरचितंनैवसंशयः ॥ साक्षतंस्थापयेत्तस्मान्निर्माणक्षणएवतत् ॥ पूजास्थानंस्कांदे ॥ पाषाणदारुजेदे शेदभातरितसंस्थले ॥ पुष्पप्रकरसंकीर्णेपाणौवावैदिकेभुवि ॥ सबिल्वताम्रपात्रेवास्थापयेत्पार्थिवं

तंयच्छक्षवर्तिव्रतंतत्संपूर्णफलावाप्तयेतदुद्यापनाख्यंकर्मकरिष्ये ॥ इतिसंकल्प्य ॥ वृताचार्यः सर्वतो भद्रेकलशंप्रतिष्ठाप्यतन्मध्यदेशेइदंविष्णुरितिमन्त्रेणहैमंश्रियासहितंविष्णुं तद्दक्षिणेसावित्र्यासहितंब्रह्माणं ब्रह्मजज्ञानमितिमंत्रेण विष्णोरुत्तरे उमासहितंशंभुंनमःशंभवेचमयोभवेचेतिमंत्रेणइतिदेवतात्रयंसंस्थाप्यपुरतोराजतंगरुडंप्रतिष्ठाप्यपूजयेत् ॥ चन्दनानंतरमंगपूजा ॥ कालायनमः शिरःपू० विष्णवे० ललाटं० वह्नये० नेत्रे० रवये० कर्णौ० दीप्ताय० नासां० निशाकराय० मुखं० रुद्राय० कंठं० शेषाय० स्कन्धौ० जगद्व्यापिने० बाहू० तेजोरूपाय० स्तनौ० महेश्वराय० वक्षः० निरंजनाय० उदरं० फलाध्यक्षाय० नाभिं० विश्वरूपिणे० कटी० जगत्प्रभवे० गुदं० स्वप्रकाशाय० ऊरू० स्वयंज्योतिषे० जानुनी० चतुर्व्यूहाय० गुल्फौ० जनाधिपाय० पादौ० परब्रह्मणे० सर्वांगं० ॥ विशेषोपहारादिसमर्प्यरात्रिंनिनयेत् । प्रातःसतिलैर्यवैः अग्नेनयसुपथेतिऋचावृत्त्यादशांशतर्पणंकृत्वातर्पणदशांशेनहोमंकुर्यात् ॥ तद्यथाअग्निंप्रतिष्ठाप्यान्वादध्यात् । प्रधानंदेवंलक्ष्मीसहितंविष्णुंघृतान्वितपायसपलाशसमिद्घृतद्रव्यैःसहस्रसंख्याकाहुतिभिः तथा ब्रह्मशंभूअष्टाविंशतितिलाहुतिभिःमंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ अत्रक्रमः ॥ अग्नेनयऋचापायसमिदंविष्णुरितिमंत्रेणपलाशसमिधःवि

ष्णुगायत्र्याघृतंजुहुयात् । ततःपीठस्थंदेवंसंपूज्यगोघृतालोडितसहस्रवर्तिभिरारार्तिक्यंकृत्वा ततआचा
र्यंसंपूज्यपीठंघृतपूरितत्रिंशत्पलपरिमितंकांस्यपात्रंयथाशक्तिवातथासुवर्णवर्तिकासंयुक्तरौप्यप्रणीतांचद
द्यात् ॥ तत्रमंत्रः ॥ रौप्यपात्रस्थितंदीपंहैमवर्तिसमन्वितम् ॥ कांस्यपात्रेणसहितंददामिव्रतपूर्तये ॥
ततोगांचदत्त्वादशाधिकान्द्विजान्सदन्नेनसंतर्पयेदिति । एवमेवमाणिक्यलक्षवर्तिकाव्रतंपूर्वोक्तेनविधा
नेनकुर्यात्सर्वमतंद्रितइति ॥ इत्येकसूत्रवर्तिमाणिक्यलक्षवर्तिकाव्रतम् ॥ अथरुद्रलक्षवर्तिकाव्रतंस्कांदे॥
तिथ्यादिसंकीर्त्यममाखिलदुरितनाशाभीष्टसिद्धिपूर्वकशिवलोकप्राप्तिद्वारासांबसदाशिवप्रीत्यर्थमाच
रितरुद्रलक्षवर्तिकाव्रतस्योद्यापनंकरिष्य इतिसंकल्प्य वृताचार्यः लिंगतोभद्रेताम्रकलशोपरिहैमंसां
बंरुद्रंकद्रुद्रायेतिमंत्रेणप्रतिष्ठाप्यपुरतोवृषभंचसंपूज्यपुराणपठनादिनारात्रिंनिनयेत् ॥ प्रातरग्निंप्रतिष्ठा
प्यान्वादध्यात् ॥ प्रधानंदेवंसांबंरुद्रंरुद्रसूक्तेन ॐ नमःशिवायेतिमंत्रेणवाघृतपायसबिल्वद्रव्यैःसह
स्राहुतिभिःमंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःपीठंगांदीपञ्चदत्त्वैकादशाधिकान्द्विजान्भोज
येदिति ॥ अत्रवर्तिकादशांशतस्तर्पणंतद्दशांशतोहवनंतद्दशांशतोद्विजभोजनंप्रतिपदोक्तंनास्ति होमद
शांशतःसाधारणंतर्पणंकांस्यपात्रसहितंदीपदानंचपूर्ववत्कर्तव्यम् । एवमेवस्कंदभविष्ययोर्बिल्वलक्ष

वर्तिकाव्रतोद्यापनमुक्तम् । रुद्रलक्षवर्तिकावत्सर्वमनुष्ठानंज्ञेयम् ॥ इतिरुद्रबिल्वलक्षवर्तिकाव्र
तोद्यापनम् ॥ अथकर्पूरलक्षदीपदानमुक्तं शैवागमे ॥ तिथ्यादिसंकीर्त्यममाऽखिलपापक्ष
यपूर्वकशिवलोककामनयाऽऽचरितलक्षकर्पूरदीपसांगतासिद्ध्यर्थंतदुद्यापनंकरिष्यइतिसंकल्प्यवृताचार्यः
सर्वतोभद्रस्थकलशेसांबंभवं नमोभवायचरुद्रायचेतिमंत्रेणसंस्थाप्यपूजयेत् । प्रातरग्निंप्रतिष्ठाप्यान्वा
दध्यात् ॥ अत्रप्रधानं भवंसहस्रतिलाहुतिभिर्मण्डलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःपीठंगांचद
त्त्वाद्विजान्भोजयेत् ॥ होममंत्रः स्थापनोक्तः । इतिकर्पूरलक्षदीपविधानम् ॥ अथलक्षदीपविधानंविष्णु
धर्मोत्तरे ॥ पंचायतनदेवानामाराध्यास्यैववाग्रतः ॥ चातुर्मास्येतुसंप्राप्तेशुभेवामासिभूमिप ॥ प्रत्य
कंचैकदीपंचदीपितंगोघृतेनच ॥ तिलतैलेनवाकुर्यात्कर्पूरेणसमन्वितम् ॥ दीपंप्रज्वाल्यविधिवद्वर्त्या
कार्पाससंभुवा ॥ एकसूत्र्यात्रिवर्त्यावाबिल्वाख्यमणिकान्विता ॥ एवंप्रकारेणलक्षदीपदानंदेवाग्रे
कृत्वा कार्त्तिकपूर्णिमायामुद्यापनंकुर्यात् ॥ तद्यथा ॥ तिथ्यादिसंकीर्त्यात्मनोविविधपापक्षयपूर्वकाभी
ष्टकामसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंममाचरितलक्षदीपदानसांगतासिद्ध्यर्थंतदुद्यापनंकरिष्ये ॥वृताचार्यः
सर्वतोभद्रस्थकलशेहैमंदेवंतन्मंत्रेणसंस्थाप्यसंपूज्यरात्रौजागरणंकृत्वा प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात्॥

ह्यधःशायीजितेंद्रियः ॥ मौनीध्यानपरोभूत्वापिप्पलस्यस्तुतिंपठेत् ॥ विष्णोर्नामसहस्रंचपौ
रुषंवैष्णवंतथा ॥ ततोलक्षदशांशेनजुहुयाद्घृतपायसम् ॥ तर्पणंतद्दशांशेनभोजनंतद्दशांशतः ॥
होमादौविष्णुगायत्रीनामसहस्रंवाग्राह्यम् ॥ होमांतेद्रोणपरिमिततिलपुंजोपरिपलादधिकरौप्यपीठोप
रिसुवर्णादधिकहैममश्वत्थतरुंसंस्थाप्यश्वेतवस्त्रेणसंछाद्यसंपूज्यचद्विजायदद्यात् ॥ तत्रमंत्रः ॥ पिप्प
लोवृक्षराजेंद्रोह्यग्निगर्भस्त्वमेवच ॥ प्रभुर्वनस्पतीनांचपूर्वंजन्मनियत्कृतम् ॥ अघौघंनाशयक्षि
प्रंतवरूपप्रदानतः ॥ ततोद्विजंप्रार्थयेत् ॥ अमुंतरुंगृहाणत्वंविष्णुरूपंद्विजोत्तम ॥ स्वीकृत्यदुष्कृतं
घोरंक्षिप्रंशांतिंप्रयच्छमे ॥ व्रतपूर्तयेशुक्लांगांचदद्यादिति ॥ इत्यश्वत्थप्रदक्षिणाविधानम् ॥ इति
श्रीमच्चित्तपा० व्रतोद्यापनकौमुद्यांलक्षपूजालक्षनमस्कारलक्षप्रदक्षिणाविधानंसमाप्तम् ॥ अथ
लक्षवर्तिकाव्रतम् ॥ तत्रादावेकसूत्रवर्तिकाव्रतं वायुपुराणे ॥ श्रावणशुद्धप्रतिपदमारभ्यकार्त्तिकपौ
र्णमासीपर्यन्तंप्रत्यहमेकंसहस्रवर्तिकोद्दीपनंकार्यमंतेउद्यापनम् ॥ अथवामाघेवैशाखपूर्णिमायाम् ।
एतेषामभावेशुभकालेकार्यम् ॥ तिथ्यादिसंकीर्त्त्यात्मनो रजःसंपर्कादिविविधपातकक्षयागम्याग
मनकोटिनाशविविधैहिकपुत्रपौत्रादिसुखप्राप्तिपूर्वकविष्णुलोकप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थमाचरि

गोत्रजेऽथवा ॥ कुर्यात्प्रदक्षिणाःसर्वाःपूजयित्वायथाविधि ॥ तिथ्यादिकंसंकीर्त्यात्मनोऽखिलपापरोग
पीडा।निरसनपूर्वकाभीष्टसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंविष्णोरमुकदेवस्येतिवालक्षप्रदक्षिणाव्रतं करिष्ये
इतिसकल्प्य गणेशादिकंसंपूज्यपूजासामग्रींगृहीत्वाअश्वत्थादिसमीपंगत्वापुरुषसूक्तेनसंपूज्यसहस्रना
मादिपठन्करचालनादिरहितएकाग्रचित्तःप्रदक्षिणाःएकरूपतयासमाप्तिपर्यंतंकुर्यात् ॥ अंतेउद्यापनंकु
र्यात् ॥ अमुककामनयाकृताःप्रदक्षिणास्तत्साद्गुण्यार्थंतदुद्यापनंकरिष्ये इतिसंकल्प्य वृताचार्यःसर्वतो
भद्रेकलशोपरिहैमंकृतप्रदक्षिणंदेवंतत्तन्मंत्रेणसंपूज्यसाष्टांगंप्रणमेत् ॥ ततोग्निंप्रतिष्ठाप्यान्वादध्यात् ॥
प्रधानंदेवंविष्णुंविष्णुगायत्र्याष्टोत्तरशतसंख्ययाचर्वाज्याहुतिभिःब्रह्मादिदेवताःएकैकयाज्याहुत्यायक्ष्ये
ततःपीठंकपिलां गांचदत्त्वायथाशक्तिब्राह्मणान्भोजयेत् ॥ अत्रयद्देवताकप्रदक्षिणास्तद्देवताप्रकाशको
मंत्रःपूजादौग्राह्यः ॥ इतिलक्षप्रदक्षिणाविधानम् ॥ अथप्रकारांतरेणाश्वत्थप्रदक्षिणाविधिर्भविष्ये ॥
संकल्पादिपूर्ववत् । इयान्विशेषः । आदावाराधयेद्विष्णुंध्यानावाहनपूर्वकम् ॥ तथैवपिप्पलतरुंनारा
यणस्वरूपिणम् ॥ अर्चयेत्पुरुषसूक्तेनउपचारैश्चषोडशैः ॥ ततःप्रदक्षिणंकुर्यात्तत्सर्वंसफलंभवेत् ॥
लक्षमेकंद्विलक्षंवात्रिचतुःपंचलक्षकम् ॥ कार्यस्यगौरवाज्ज्ञेयंद्वादशांतंसमाचरेत् ॥ ब्रह्मचारीहविष्याशी

धात्रीपद्मंदूर्वांकुरास्तथा ॥ करवीरंकार्णिकारंशतपत्रंचकेतकम् ॥ चंपकंमल्लिकांचैवसौवीरंकनकंतथा ॥ जातीपुष्पंपाटलकंपुन्नागंचकदंबकम् ॥ बादरंचामरंपूगंफलैरन्यैश्चपूजयेत् ॥ सुगंधैर्ऋतुसंभूतैःशस्तैः पादपपल्लवैः ॥ इति ॥ यद्यत्पूजयतेपुष्पंतत्स्वरूपंहिरण्मयम् ॥ कारयेच्छतकेचैकंसहस्रेवापिकारयेत् ॥ लक्षेवादापयेद्धीमान्यथावित्तानुसारतः ॥ विष्णोर्नामसहस्रेणगायत्र्यामूलमंत्रतः ॥ सहस्रंद्विसहस्रं वात्रिसहस्रंयथाविधि ॥ उपक्रमदिनेयावत्प्रत्यहंतावतीभवेत् ॥ इति ॥ तिथ्यादिकंसंकीर्त्य नाना विधपातकशमनपूर्वकैहिकामुष्मिकनिरतिशयानंदप्राप्तिद्वारालक्ष्मीनारायणप्रीत्यर्थंतुलस्यादिलक्षपूजां करिष्ये ॥ इतिसंकल्प्य पीठेपुरुषसूक्तेनदेवंसंपूज्यनामभिस्तुलस्याद्यर्पयेत् ॥ समाप्तावुद्यापनं कुर्यात् ॥ पूर्वसंकल्पांतेअमुकलक्षपूजोद्यापनंकरिष्ये इति संकल्प्य सायंवृताचार्यैः वेदिकायांस र्वतोभद्रेब्रह्मादिदेवतास्थापनपूर्वकंकलशंप्रतिष्ठाप्यतत्रदेवंपूजयेत् ॥ तत्रायंक्रमः ॥ सर्वतोभद्रेब्रह्मा दिदेवताःसंस्थाप्य तदुपरिप्रस्थतिलपुंजं तदुपरिप्रस्थगोधूमपुंजं तदुपरिप्रस्थपारिमितशुद्धतंडुलपुं जंकृत्वातत्रकुंकुमेनाष्टदलपद्मंविरच्यतन्मध्येताम्रमयेपिधानसहितंताम्रकलशंप्रतिष्ठाप्य तत्रसौवर्णंचतु र्भुजंलक्ष्म्यालिंगितवामांगंनारायणंसहस्रशीर्षेतिमंत्रेणसंस्थाप्यपुरतः सौवर्णंराजतंवागरुडम् ॥ साम

ध्वनिशरीरस्त्वंवाहनंपरमेष्ठिनः ॥ विषपापहरोनित्यमतःशांतिंप्रयच्छमे इति ततऐशान्यांविदिक्षुशं
खंचक्रंगदांपद्मंच ततःपरितोलोकेशान्संस्थाप्य पूजयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्र
धानंलक्ष्मीनारायणम् ॐनमोनारायणायेतिमंत्रेणमधुलाजमिश्रिततिलपायसघृतचरुद्रव्यचतुष्टयेनप्रति
द्रव्यमष्टोत्तरसहस्राहुतिभिरष्टोत्तरशताहुतिभिर्वातथाचतुष्टयेनअयुताहुतिभिःसहस्राहुतिभिर्वासहस्रनाम
मंत्रैर्यक्ष्ये ॥ परिवारदेवतामंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ तत आचार्यायपीठमनेनमंत्रेण
दद्यात् ॥ जलशायीब्रह्मपितायद्गर्भेसचराचरम् ॥ अनंतभोगशयनःप्रीयतांमेजनार्दनः ॥ इति
दत्त्वागांपयस्विनींचदत्त्वाऽधिकफलप्राप्तयेसोपस्करांशय्यांचदत्त्वादशाधिकान्द्विजान्सदन्नेनभोजयेदि
ति ॥ एवमेवविधानेनगणेशांबिकयोर्नृप ॥ तत्तन्मंत्रेणपूजातुतत्तन्नामसहस्रकैः ॥ गणे
शेलड्डुकैर्होमंपंचखाद्यैरथापिवा ॥ पायसेनतुदेव्याश्चतिलैर्वाकेवलैरपि ॥ एवंकृत्वाविधाने
नस्वर्गलोकेमहीयते ॥ इतिविष्णुलक्षपूजाविधानम् ॥ अथलक्षनमस्कारव्रतंभविष्ये ॥
वसिष्ठउवाच ॥ ब्रह्महत्यादिपापानांप्रायश्चित्तंयदीच्छसि ॥ तदालक्षनमस्कारव्रतंकुरुमहीपते ॥ चातु
र्मास्येतुसंप्राप्तेकेशवेशयनंगते ॥ आषाढस्यसितेपक्षेएकादश्यांसमारभेत् ॥ कार्त्तिकस्यसितेपक्षेपौर्णे

मास्यांसमापयेत् ॥ मार्गशीर्षेमाघेचैत्रेवैशाखे वा पूर्णिमायांसमापयेदिति ॥ तिथ्यादिसंकीर्त्य ममा
नेकजन्मोपार्जितनानाविधपातकशमनपूर्वकातुलभोगप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थंविष्णोरमुकदेवस्ये
ति वा लक्षनमस्कारव्रतमहं करिष्ये इतिसंकल्प्य तुलस्यग्रेअश्वत्थमूलेगंगातीरेगवांगोष्ठेवाऽन्यत्रशुभ
स्थलेवायद्देवताप्रीतयेव्रतं तद्देवंपीठेपुरुषसूक्तेनसंपूज्य नमोस्त्वनंतायेतिस्तुत्वातद्देवतानाममंत्रेणतद्दे
ताप्रकाशकवैदिकमंत्रेणमूलमंत्रेणवानमस्कारानष्टांगानेकरूपेणसमाप्तिपर्यंतंकुर्यात् ॥ समाप्तौउद्यापनं
कुर्यात् ॥ पूर्वसंकल्पांतेलक्षनमस्कारव्रतस्यसांगतासिद्धये तदुद्यापनं करिष्ये इतिसंकल्प्य वृताचार्यः
सर्वतोभद्रेकलशोपरिहैमंदेवंतद्देवतानाममंत्रेणसंस्थाप्यपूजयेत् ॥ विशेषार्घ्यंत्रयंदद्यात् ॥ देवदेवजग
न्नाथसर्वक्रतुफलप्रद ॥ व्रतेनानेनसंतुष्टो गृहाणार्घ्यंमयार्पितम् ॥ इति ॥ ततोऽग्निप्रतिष्ठाप्यान्वादध्यात् ॥
अत्रप्रधानंदेवंविष्णुममुकंवासप्तावृत्त्यापौरुषेणचरुतिलव्रीहिपलाशसमित्सर्पिर्द्रव्यैः प्रतिद्रव्यंयक्ष्ये ॥
ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःपीठंगांचआचार्यायदत्त्वाष्टोत्तरशताधिकद्विजान्यथाश
क्तिवाभोजयेदिति ॥ इतिलक्षनमस्कारव्रतम् ॥ अथलक्षप्रदक्षिणाविधानं विष्णुधर्मोत्तरे ॥ आषाढशुक्ल
पूर्णिमायांप्रारंभः—कार्त्तिक्यांसमापनम् । अथवाशुभमासेवाप्रारंभसमापने । सुरालयेश्वत्थमूलेतुलस्यां

स्वर्गायलोकायस्वाहेतिदहेत् । उदकधाराञ्चदद्यात् । तद्विन्यासप्रकारस्तु–शिरस्यशीत्यर्द्धमेवंग्रीवा
यांतुदशैवतु ॥ बाह्वोश्चैवशतंदद्यादंगुलीषुतथादश ॥ उरसिद्विंशतंदद्याद्विंशतिंजठरेतथा । अष्टार्द्धंशि
श्नेदद्याद्द्वादशार्द्धंतुमुष्कयोः ॥ ऊर्वोश्चैवशतंदद्यात्त्रिंशतंजानुजङ्घयोः ॥ पादांगुलीषुदशवैह्येतत्प
त्रविकल्पनम् ॥ अनाहिताग्नेर्देहस्तुदाह्योगृह्याग्निनाद्विजैः ॥ तदलाभेपलाशोत्थैः पत्रैः कार्यः पुमा
नपि ॥ शतैस्त्रिभिस्तथाषष्ट्याशरव्रातैर्विधानतः ॥ वेष्टितव्यस्तथायत्नात्कृष्णसारस्यचर्मणा ॥ ऊर्णा
सूत्रेणबद्धाथप्रलिप्तव्यस्तथायवैः । सुपिष्टैर्जलसंमिश्रैः प्रदग्धव्यस्तथाग्निना ॥ असौस्वर्गायलोकाय
स्वाहेत्युक्त्वास्वबान्धवैः ॥ एवंपर्णनरंदग्ध्वात्रिरात्रमशुचिर्भवेत् ॥ तुल्यन्यायतयाऽस्थिदाहेपित्रिरा
त्राशौचम् । एवंकृतेमृतभ्रान्त्यायद्यागच्छेत्पुमान्क्वचित् ॥ कुर्यादथायुषीस्त्विष्टिंपुनराधायपावकम् ॥
साग्नेरियमिष्टिः । निरग्नेस्तुशान्तिस्वस्त्ययनमन्यदिति ॥ अथाशौचान्त्यदिनकृत्यम् ॥ तत्राशौचा
न्तपूर्वदिनेसर्वेषांरजकद्वारावस्त्रशुद्धिः कारयितव्या ॥ अशौचान्तदिवसेगृहशुद्धिंकृत्वामृन्मयपाक
भाण्डानित्यक्त्वास्नात्वादशमंपिण्डंदत्त्वा बहिरुदकान्तेकेशलोमनखान् यथायोग्यंवापयित्वातिलतै

लेनांक्त्वा गौरसर्षपकल्केनशिरश्चोन्मृज्यस्नात्वा प्रेतस्पृष्टवासांस्यंत्येभ्यःस्वाश्रितेभ्योदत्त्वाऽऽच
म्य वाग्यतो वासोयुग्ममहतंनवंशुद्धंपुरातनंवायुक्तमव्रणंपरिधायाऽऽमाविष्टोगांसुवर्णंगोरोचनंदधिदू
र्वासितसर्षपंब्राह्मणोऽग्निंक्षत्रियोवाहनायुधे वैश्यःप्रतोदप्रग्रहौ शूद्रोयष्टिंसंस्पृश्य मंगलानिसंकीर्त्य
ब्राह्मणान् स्वस्तिवाचयित्वा गृहंप्रविशेत् ॥ अत्रदिनेब्राह्मणाःपञ्चगव्यपानंकुर्वन्तीतिसतामाचारः ॥
इतिश्राद्धविवेकेप्रथमक्रियापरिच्छेदोद्वितीयः ॥ २ ॥ अथैकादशाहश्राद्धार्थं निमन्त्रणादि । तत्रा
दौआशौचान्तदिनेनिरामिषमेकवारंभुक्त्वा रात्रौसर्वभुक्तजनेगृहेविप्रनिवेशनम् ॥ गोमयोपलिप्तदक्षि
णप्रवणभूमौ ब्राह्मणमुदङ्मुखमुपवेश्यकृतापसव्योदक्षिणाभिमुखःपातितवामजानुः ॐ गतोसिदिव्य
लोकंत्वंकृतान्तविहितात्पथः ॥ मनसावायुभूतेनविप्रेत्वाहंनियोजये ॥ पूजयिष्यामिभोगेनइतिप्रेतोद्दे
शेनपठित्वा पुष्पचन्दनताम्बूलानिब्राह्मणायदत्त्वा ब्राह्मणदक्षिणजानुंस्पृष्ट्वा ॐ अस्यांरात्रौ अमुक
गोत्रस्यपितुरमुकप्रेतस्याऽऽद्यश्राद्धकरणाय भवन्तंब्राह्मणमहमामन्त्रये इत्यामान्त्रयेत् । ॐ आम
न्त्रितोस्मीतिप्रतिवचने ब्राह्मणेनोक्ते ॐ अक्रोधनेनशौचपरेणसततंब्रह्मचारिणा ॥ भवितव्यंच

भवतामयाचश्राद्धकारिणा ॥ सर्वायासविनिर्मुक्तेनकामक्रोधविवर्जितेनभवितव्यंभवताचश्वस्तनेश्राद्धकर्मणि इतिब्राह्मणमुद्दिश्यपठेत् । यद्यविघ्नेनरजनीयास्यतितदासर्वमेतत्करिष्यामीतितेनोक्ते ॐ इदंतेपाद्यमितिपाद्यंदत्त्वा द्विजंनमस्कृत्य प्रेतमुद्दिश्यतिलतैलेनाजानुविप्रपादौप्रक्षालयेत् । अत्रस्त्रियाअप्युद्देश्यत्वे ॐ गतोसीत्यविकृतमेवपठनीयम् आत्मत्वेनोद्देश्यत्वात् ॥ अथैकादशाहकृत्यम् ॥ बहिर्नदीतीरादौप्रातःश्वेतवस्त्रयुगलेनस्नात्वा सूर्योदयेब्राह्मणस्यश्मश्रुकर्मनखच्छेदनञ्चकारयित्वा ताम्रपात्रेणतैलोद्वर्तनेनस्नानोपकरणंचदद्यात् । स्वयंस्नात्वा कृतनित्यक्रियो नदीतीरेगृहेवा श्राद्धभूमिंपरिकल्प्य पञ्चगव्येनोपलिप्यज्वलदंगारैःसंशोध्यगौरमृत्तिकयाऽऽच्छाद्यतिलैःसर्षपैश्चविकिरेत् ॥ गोमयोपलिप्तावृतपाकस्थानेतिलान्विकीर्यपरितश्छागान्बन्धयित्वा तत्रसपिण्डद्वारास्वयंवानूतनमृन्मयभाण्डेपाकमारभेत् । तत्राचान्तः पूर्वाभिमुखउदङ्मुखोवाशय्यांदद्यात् । तत्र ॐ सोपकरणशय्यायैनमः ॐ ब्राह्मणायनमः इतिदेयब्राह्मणंत्रिःसम्पूज्यइमांसोपकरणांशय्यांददानीति द्विजकरेजलदानंवारिणाशय्याभिषेचनञ्चकुर्यात् । ॐददस्वेतिप्रतिवचनम् । तत्रकुशत्रयतिलजलान्या

गार्तीरमस्थीनिनीत्वा स्नात्वातान्यस्थीनिपञ्चगव्येनप्रोक्ष्य हिरण्यमध्वाज्यतिलैःसंयोज्यमृत्तिपिण्ड
पुटेनिधाय दक्षिणांदिशंपश्यन्ॐनमोस्तुधर्मायेतिवदञ्जलंप्रविश्यप्रेतोगतःस्वर्गकामोदक्षिणाभिमुखः
समेप्रीतइत्युक्त्वा गंगाम्भसिनिःक्षिपेत । ततःस्नात्वाउत्थायसूर्यंपश्येत्। ततः आचम्यॐअद्यकृतैतद
स्थिप्रक्षेपप्रतिष्ठार्थमिदंहिरण्यमग्निदैवत्यं यथानामगोत्रायब्राह्मणायदक्षिणाञ्च दातुमहमुत्सृजे इतिद
क्षिणाञ्चदद्यात । एवंकृतेप्रेतपुरःस्थितस्यस्वर्गेगतिः स्यात्तुमहेन्द्रतुल्या॥ यावदस्थिमनुष्यस्यगंगातो
येषुमज्जति ॥ तावद्वर्षसहस्राणि स्वर्गेलोकेमहीयते । गंगातोयेषुयस्यास्थिप्लवतेशुभकर्मणः ॥ नत
स्यपुनरावृत्तिर्ब्रह्मलोकात्कथञ्चन ॥ गौडाः-दशाहाभ्यन्तरेयस्यगंगातोयेस्थिमज्जति ॥ गंगायांमर
णेयादृक्तादृक्फलमवाप्नुयात् ॥ ब्रह्मपुराणे-मातुः कुलंपितृकुलंवर्ज्जयित्वानराधमः ॥ अस्थीन्यन्य
कुलोत्थानि नीत्वा चान्द्रायणंचरेत् ॥ एवंमातृकुलपितृकुलान्यकुलोत्थस्यास्थिनयनेधर्मबुद्ध्यादो
षाभावः ॥ ॥ अथाचाराग्निरग्नेरप्यस्थिपर्णनरदाहः ॥ दाह्यशरीरालाभे तदस्थिघृतेनाभ्युक्ष्य वस्त्रेणा
ऽऽच्छाद्यदहेत् ॥ ॥ अस्थ्नामप्यलाभे षष्ट्यधिकशतत्रयपलाशपत्रैःपुरुषाकृतिं विन्यस्य ॐ असौ

ल्लोकान्प्रयच्छन्तुचशाश्वतान् ॥ अस्माकमायुरारोग्यंसुखंचददतांवरम् इतिपठित्वा ॐ एषोऽष्टांग बलिः शंकरादिदेवताभ्योनमः इत्येकंबलिंदत्त्वाएवंप्रदक्षिणक्रमेणापरंबलित्रयंत्रिषुद्वारेषुदत्त्वा तान्बलीन् क्षीरेणाभ्युक्ष्य शंकरादिदेवताःस्वीयस्वीयस्थानंगच्छन्त्वितिदेवताविसृज्याऽवशिष्टक्षीरे ण वाग्यतःचितास्थान्यस्थीनिअभ्युक्ष्यप्रथमंशिरोस्थीनिशमीपलाशशाखाभ्यामुद्धृत्याऽऽज्येनाभ्यु क्ष्यगन्धवारिणासिक्त्वाकृतापसव्यो दक्षिणांगुष्ठकनिष्ठाभ्यांगृहीत्वाततोऽन्यान्यपिअस्थीनिगृहीत्वा पञ्चगव्येनसुगन्धिवारिणासिक्त्वा पलाशपुटेनिक्षिप्य क्षौमवस्त्रेणसंवेष्ट्य मृन्मये नूतनभाण्डेसा च्छादनेनिदध्यात् । तद्भाण्डमरण्येवृक्षमूलेवापंकशैवालयुतगर्तेवानिभृतंनिवासयेत् । चिताभस्मादि तोयेविनिःक्षिपेत् । गोमयाम्बुभिश्चिताभूमिशुद्धिंविधाय पूर्ववच्चतुर्दिशंशङ्करादिदेवताभ्योबलीनर्घा दियुक्तान्नमःक्रव्यादमुख्येभ्योदेवेभ्यइतिमन्त्रेणदद्यात् । तान्विसृजेत् । बल्यन्नमन्येभ्योदद्यात् अम्भ सिवाक्षिपेत् । ततश्चिताभूमेराच्छादनार्थंवृक्षः पुष्करकः पट्टकोवाकारयितव्यः । पुष्करकः इष्टिका निर्मितंदेवकुट्टकाकारंगृहम् । ततः सचैलोबन्धुभिः सह स्नायात् । अथ कश्चित्पुत्रपौत्रसहोदरादिर्मं

त्वा अपसव्यंकृत्वाऽन्नपात्रसमीपेपिण्डदानार्थंमृत्तिपिण्डिकायामध्ये प्रादेशमात्रंपरिमाय वामान्वारब्ध
दक्षिणहस्तेन ॐ अपहताऽसुराइत्यादिनैतद्विलिख्य दर्भपिञ्जुलीमुत्तरस्यांदिशिक्षिप्त्वा रेखोपरि
ॐ येरूपाणीतिमन्त्रेणाङ्गारंभ्रामयित्वाऽङ्गारंदक्षिणतःक्षिपेत् । ततोरेखोपरिच्छिन्नमूलान्कुशाना
स्तीर्य ॐ देवताभ्यइतिसव्येनत्रिर्जपेत् । ततोऽपसव्येनपुटकेजलतिलगन्धपुष्पाणिक्षिप्त्वा पुटकं
वामहस्तेकृत्वामोटकादीन्यादाय ॐ अद्यामुकगोत्रपितरमुकप्रेताऽस्थिसंचयननिमित्तकैकोद्दिष्ट
श्राद्धपिण्डस्थानेऽत्रावनेनिक्ष्वतेमयादीयते तवोपतिष्ठतामितिकुशोपरिअवनेजनजलंकिञ्चिद्दद्यात् ।
ततोघृतमधुतिलयुक्तेनान्नेनपिण्डंनिर्माय घृतमध्वभिघारितंपिण्डंमोटकादीनिचादाय ॐ अद्यामुक
गोत्रपितरमुकप्रेताऽस्थिसंचयननिमित्तकैकोद्दिष्टश्राद्धे एषपिण्डस्तेमयादीयते तवोपतिष्ठतामिति
कुशोपरिवामान्वारब्धदक्षिणहस्तेनपिण्डंदद्यात् । ततःआस्तृतकुशमूलेतूष्णींकरंप्रोक्ष्य सव्यंकृत्वा
ऽऽचम्याऽपसव्यंकृत्वा ॐ अत्रपितर्मादयस्वेत्यादिमन्त्रंपठित्वा उत्तराभिमुखीभूय श्वासनिरोधं
कुर्यात् । पितरंभास्वरमूर्तिंध्यायन् अमीमदन्तपितायथेत्यादिनाऽऽहेनजपेत् । ततः पूर्वाव

शिष्टजलमवनेजनपात्रंवामहस्तेकृत्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्रपितरमुकप्रेताऽस्थिसंच
यननिमित्तकैकोद्दिष्टश्राद्धपिण्डेऽत्रप्रत्यवनेनिक्ष्वतेमयादीयते तवोपतिष्ठतामिति प्रत्यवनेजनंदद्या
त् । ततोनीवींविस्रस्य सव्यंकृत्वाचम्यहरिंस्मृत्वा अपसव्यंकृत्वा वामहस्तेनसूत्रमादायकरा
भ्यांतद्गृहीत्वाएतत्तेपितर्वासः इतिसूत्रंपिण्डोपरिधृत्वा ॐ अद्यामुकगोत्रपितरमुकप्रेताऽस्थिसंच
यननिमित्तकैकोद्दिष्टश्राद्धपिण्डे एतद्वासस्तेमयादीयतेतवोपतिष्ठतामितिमोटकादिनादद्यात् । ततः
पिण्डंगन्धपुष्पधूपदीपताम्बूलैरभ्यर्च्यपिण्डशेषान्नंपिण्डसमीपेविकिरेत् ।ॐ शिवाआपः सन्तुॐसौम
नस्यमस्तु ॐ अक्षतंचारिष्टमस्तु इति अन्नपात्रेजलादीनिदत्त्वा मोटकादीन्यादाय ॐ अद्यामुकगो
त्रस्य पितुरमुकप्रेतस्याऽस्थिसंचयननिमित्तकैकोद्दिष्टश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठतामित्युत्सृजे
त् । ततःसव्यंकृत्वादक्षिणां दिशं पश्यन् ॐ अघोरःपितात्त्विति पिण्डोपरिपूर्वाग्रां जलधारांदद्यात् ।
ततः पूर्वाभिमुखः ॐ गोत्रंनोवर्द्धतांदातारोनोभिवर्द्धन्तांवेदाःसन्ततिरित्यादिनाआशिषोयाचेत ।
ततोपसव्यंकृत्वा पिण्डोपरिसपवित्रान्कुशानास्तीर्यपुटकादिजलेन ॐऊर्ज्जंवहन्तीरमृतंघृतंपयइत्यादि

पठित्वा कुशोपरि दक्षिणाग्रांजलधारांदद्यात् । ततःपिण्डमाघ्रायोत्थापयेत् । छिन्नमूलकुशानंगारंचा
ग्नौदहेत् । अर्घपात्रमुत्तानीकृत्य मोटकादीनिदक्षिणाद्रव्यंचादाय ॐ अद्यामुकगोत्रस्यपितुरमुकप्रे
तस्य कृतैतदस्थिसंचयननिमित्तकैकोद्दिष्टश्राद्धप्रतिष्ठार्थमिदंरजतंचन्द्रदैवतं यथानामगोत्रायब्राह्मणा
यदक्षिणांचदातुमहमुत्सृजे इतिदक्षिणांदद्यात् । ततःसव्येन त्रिर्दैवताभ्यइतिजपित्वाऽपसव्यंकृत्वादी
पंनिर्वाप्य हस्तौपादौप्रक्षाल्य सव्येनाचम्य ॐ प्रमादादित्यादिपठित्वाविष्णुंस्मरेत् । श्राद्धीयवस्तू
निब्राह्मणायप्रतिपादयेत् जलेवाक्षिपेत् । ततःपुत्रादिर्ज्ञातिबन्धुमिलितःस्नातः सुधौतवस्त्रो नानावि
धफलमूलभक्ष्यपानादिभिः स्वजात्यनुरूपैरष्टौपात्राणिपूरयित्वा गन्धपुष्पधूपदीपादिकंचगृहीत्वा
श्मशानसमीपमागत्यत्वरान्वितैःकैश्चित्पुष्पैः कैश्चिद्भोजनैःकैश्चिद्धूपैःकैश्चिद्दीपैःकैश्चिन्माल्यैः कैश्चि
त्पानीयैःकैश्चिदक्षतैःसर्वाणिनिवेदयेत् । कैश्चिन्निरहंकारयुक्तैःसमन्ततश्चतुर्षुअन्नादिपूर्णपात्रेषुनि
वेदितेषु प्रथमंचितायाउत्तरद्वारसमीपेउपविश्य ॐ नमःक्रव्यादमुख्येभ्योदेवेभ्यइतिसर्वदा ॥ येऽस्मि
ञ्श्मशानेदेवाःस्युर्भगवन्तः सनातनाः॥ तेस्मत्सकाशाद्गृह्णन्तुबलिमष्टांगमक्षयम् ॥ प्रेतस्यास्यशुभाँ

न् पुरुषत्तृतिक्षममन्नंपरिविष्यात्। व्यञ्जनघृतजलान्युपनीय अन्नोपरिमधुदत्त्वाॐमधुवाताइत्यादिऋच
म् ॐमधुमधुमध्विविचजपेत्। ततोऽन्यस्ताभ्यांहस्ताभ्यामधोमुखाभ्यां पात्रमालभ्य ॐपृथिवीतेपात्रमि
तिजपेत् । ॐ इदंविष्णुरितिजपेत् । कृष्णकव्यमिदंरक्षमदीयमितिपठित्वा ॐ इदमन्नम् ॐइमाआपः
ॐइदंहविरिति अत्रजलघृतान्नेषुदक्षिणहस्तांगुष्ठंनिवेश्यॐअपहताइतितिलानन्नोपरिक्षिप्त्वा वामहस्ते
नपात्रमत्यजन्दक्षिणहस्तेनमोटकादीन्यादायॐअद्यामुकगोत्रपितरमुकप्रेतास्थिसंचयननिमित्तकैको
द्दिष्टश्राद्धेइदमन्नंसोपकरणंतेमयादीयतेतवोपतिष्ठतामित्युत्सृजेत्। ततोगायत्रींमधुवाताइत्यादिऋचम्
ॐ मधुमधुमध्विति ॐ अन्नहीनंक्रियाहीनमितिचजपेत् । ततःकुशेषूपविश्य गायत्रींमधुवाताइत्यादि
कंजपेत् । ततः ॐकृणुष्वपाजइत्यादिरक्षोघ्नीः ॐ उदीरतामित्यादिपितृमन्त्रान् पुरुषसूक्तम् आशुःशि
शानइत्यादिकमप्रतिरथम् अन्यानिचपवित्राणियथाशक्तिजपेत् । ॐनमस्तुभ्यमितिश्लोकंचजपेत् ।
तत उच्छिष्टसन्निधानास्तृतकुशत्रयां भूमिंजलेनप्रोक्ष्यतिलघृतसहितमन्नञ्जलेनाप्लाव्य ॐ अग्निदग्धा
श्चयेजीवायेत्वदग्धाःकुलेममइत्यादिमन्त्रेणकुशोपरिअन्नंविकिरेत् । ततःसव्यंकृत्वाऽऽचम्यहरिंस्मृ

डयः ॥ दन्तलोमाद्यष्टमेनवीर्यंतुनवमेनतु ॥ दशमेनतुपूर्णत्वं तृप्तताक्षुद्विपर्ययः । क्षत्रियवैश्यशूद्रा
णांसम्पूर्णाशौचे नवसुदिनेषुनवपिण्डान्दत्त्वाऽऽशौचान्तदिनेदशमपिण्डदानम् । त्र्यहाशौचे ब्राह्मणा
दिभिः सर्वैः प्रथमदिवसेत्रयःपिण्डा दातव्याः । द्वितीयदिनेचत्वारः । तृतीयदिनेत्रयः पिण्डादेयाः ।
अथवाप्रथमदिवसेएकः पिण्डः द्वितीयदिवसेचत्वारः तृतीयदिवसेपञ्च।एवंदशपिण्डादातव्याः। सद्यः
शौचेत्वेकाहेनैवदशपिण्डादातव्याः । अथसंपूर्णाशौचान्तरे एकैकस्मिन्दिनेएकैकंदत्त्वाऽन्तिमदिनेऽव
शिष्टाःपिण्डा देयाः । पाकासंपत्तौफलमूलशाकगुडदुग्धशालिसक्तूनामन्यतमेनपिण्डोदेयः येनद्रव्येण
प्रथमपिण्डोदत्तस्तत्सजातीयेनैवपिण्डान्तरमपिदद्यात् । पुत्राद्यधिकारिणिविदेशस्थेऽन्येनदाहकर्त्रापि
ण्डदानेकृतेपि पुत्रादिरपिपिण्डंदद्यात् । येनैव प्रथमः पिण्डोदत्तः सएवपिण्डान्तरमपिदद्यात् ॥
अथास्थिसंचयः ॥ चतुर्थेब्राह्मणानांतुपञ्चमेहनिभूभुजाम् ॥ नवमेवैश्यजातीनांशूद्राणांदशमात्परे ।
कर्त्तव्यंतुनरैःश्राद्धंदेशकालाविरोधतः ॥ श्राद्धमत्रास्थिसंचयननिमित्तकम् । एतच्चसंपूर्णाशौचे
षुदिनकथनम् । एवमाशौचिनामङ्गस्पर्शेपि । चतुर्थेहनिविप्रस्यषष्ठेवैक्षत्रियस्यतु ॥ अष्टमेदशमेचै

वस्पर्शः स्याद्वैश्यशूद्रयोः ॥ यत्तु प्रथमेह्नितृतीयेवासप्तमेनवमेपिवा ॥ अस्थिसंचयनंकार्यंनिजैस्त
द्गोत्रजैः सहेतिस्मृतिवाक्यं तद्ब्राह्मणादीनांचतुर्थादिदिनेष्वस्थिसंचयासंभावनायांप्रथमादिदिवसेष्व
स्थिसंचयनविधायकम् । त्र्यहाशौचेतुद्वितीयेह्नि । सद्यःशौचेतद्दिनएवास्थिसंचयः कर्तव्यः ।
असंपूर्णाशौचान्तरेषुतृतीयभागोत्तरमस्थिसंचयोऽङ्गस्पर्शश्चकर्तव्यइति ॥ अथप्रयोगः ॥ चतुर्थदि
नेस्नात्वा चतुर्थंपिण्डंदत्त्वा श्राद्धदेशस्यगोमयोपलेपनंपञ्चगव्योपलेपनंज्वलदंगारभ्रामणगौरमृत्ति
काच्छादनानिकारयित्वा गौरसर्षपैस्तिलैश्चविकिरणं स्वयंचश्राद्धकर्तापाकमारभेत । ततः सिद्धे
ऽन्नेरक्षादीपंसंस्थाप्य श्राद्धेदेयानिवस्तून्यासाद्य आचम्य पूर्वाभिमुखउपविश्य ॐ अपवित्रः पवित्रो
वाइत्यादिपठित्वा पुण्डरीकाक्षः पुनात्वितिश्राद्धीयवस्तूनांकुशत्रयजलेनसेचनम् । ततः ॐ अद्यामुक
गोत्रस्यपितुरमुकप्रेतस्यास्थिसंचयननिमित्तकमेकोद्दिष्टश्राद्धमहंकरिष्ये इतिसंकल्पंकुर्यात्ततस्त्रिर्गायत्रीं
जपित्वा ॐदेवताभ्यइतित्रिर्जपेत्। ततोऽपसव्यंकृत्वामोटकतिलजलान्यादायदक्षिणाभिमुखःसव्यंजानुं
पातयित्वा ॐ अद्यामुकगोत्रपितरमुकप्रेताऽस्थिसंचयननिमित्तकैकोद्दिष्टश्राद्धेइदमासनं ते मयादीयते

तवोपतिष्ठतामित्यासनंमोटकरूपमुत्सृजेत् । ततः ॐ अपहताऽसुरारक्षा ᳪ सिवेदिषदः इतिश्राद्धदेशे
वामावर्तेनतिलान्विक्षिपेत् । ततः ॐ आयन्तुनइतिमन्त्रंजपेत् । ततः पुटकेकुशपत्रद्वयंप्रादेशमात्रंद
क्षिणाग्रंधृत्वाॐ शन्नोदेवीरभिष्टयइतितत्रजलंदद्यात् । तिलोसीतितिलान्दद्यात् । तूष्णींगन्धपुष्पंच
तत्रक्षिपेत् । ततस्तदर्घपात्रंवामहस्तेकृत्वा कुशपत्रद्वयंपरिवेषणपात्रेउत्तराग्रंधृत्वातदुपरिकिंचिदुदका
न्तरंदत्त्वा ॐयादिव्याआपइत्यादिपठित्वा मोटकादीन्यादाय ॐअद्यामुकगोत्रपितरमुकप्रेताऽस्थिसं
चयननिमित्तकैकोद्दिष्टश्राद्धेएषहस्तार्घस्तेमयादीयतेतवोपतिष्ठतामितिपवित्रोपरि अर्घजलंददुत्सृजे
त् । ततः पवित्रपुष्पसहितमर्घपात्रमात्रमासनवामपार्श्वेपित्रेस्थानमसीतिअधोमुखंकृत्वास्थापयेत् ।
ततोमोटकादीन्यादाय ॐ अद्यामुकगोत्रपितरमुकप्रेताऽस्थिसंचयननिमित्तकैकोद्दिष्टश्राद्धे एतानिग
न्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसितेमयादीयन्तेतवोपतिष्ठन्तामितिगन्धादीनिदद्यात् । ततोज
लेनासनभोजनपात्रयोश्चतुर्दिशंमण्डलंकृत्वा श्राद्धीयान्नाग्रभागंसघृतव्यंजनतिलजलम् ॐइदमन्नमेतद्भ
स्वामिपितृभ्योनमइतिउत्सृजेत् । ततोहस्ताभ्यांताम्रपात्रमन्नपूर्णमादाय मनाक्स्थित्वा पितरंध्याय

लक्ष्मीभ्रातर्नमोस्तुते ॥ व्रतंसंपूर्णतांयातुगृहाणार्घ्यंविधोमम ॥ ततोभोजनंकृत्वारात्रौजागरणंकुर्यात्॥
प्रातःविसर्जयेत् अनेनमंत्रेण ॥ पंकजंदेविसंत्यज्यममवेश्मनिसंविश ॥ यथासपुत्रभृत्योहंसुखीस्यां
त्वत्प्रसादतः ॥ तत्सूत्रंवर्षपर्यन्तंधारयेत् ॥ एवंषोडशवर्षपर्यंतमशक्तःषोडशदिनंवाचरित्वांतेउ
द्यापनंकुर्यात् ॥ पूर्वोक्तसंकल्पांतेवृताचार्यः सर्वतोभद्रस्थकलशेहैमींमहालक्ष्मीप्रतिमांसक्तुमिवेतिमंत्रे
णसंस्थाप्यपूर्ववत्पूजयेत् ॥ चंद्रायार्घ्यंदत्त्वादेवीम्प्रार्थयेत् ॥ क्षीरोदार्णवसंभूतेकमलेकमलालये ॥
प्रयच्छसर्वकामान्मेविष्णुवक्षःस्थलालये ॥ पुत्रान्देहिधनंदेहिसौख्यंसौभाग्यमेवच ॥ कुरुश्रियंमहा
लक्ष्मीमलक्ष्मींत्वाशुनाशय ॥ रात्रौजागरणंकुर्यात् ॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ प्रधानं
महालक्ष्मींश्रीसूक्तेनप्रत्यृचंकमलैःपुनर्घृताक्तपायसबिल्वघृतद्रव्यैःप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः
लक्ष्मींमंत्रेणयक्ष्ये मंडलदेवताश्चाज्येन ॥ एवंहोमंकृत्वा आचार्यंसंपूज्यपीठंगांचदत्त्वा ततःषोडश
मिथुनानिवस्त्रादिभिः पूजयित्वाशूर्पेषोडशनानाविधभक्ष्याणि चंदनताडपत्रपूगीफलानिपर्णानिचनिः
क्षिप्यान्यशूर्पेणाच्छाद्यदद्यात् ॥ क्षीरोदार्णवसंभूतालक्ष्मीश्चंद्रसहोदरी ॥ व्रतेनानेनसंतुष्टाप्रीयतांविष्णु
वल्लभा ॥ एवंषोडश ॥ ततोब्राह्मणान्संतर्प्य आशिषोगृहीत्वाभुंजीत ॥ इति श्रीमच्छंकरविरचितायां

व्रतोद्यापनकौमुद्यामष्टमीव्रतानि ॥ छ ॥ अथनवमीव्रतानि ॥ तत्रचैत्रशुद्धनवम्यांरामनवमीव्रतोद्यापनंस्कांदे ॥ तच्चपरविद्धायांमध्याह्नव्यापिन्यांकार्यम् ॥ तिथ्यादिसंकीर्त्य० आत्मनःअखिलपापक्षयपूर्वकचतुर्विधपुरुषार्थसिद्धिद्वारा ममआचरितस्यरामनवमीव्रतस्यसांगतासिद्ध्यर्थंतदुद्यापनंकरिष्ये ॥ ततः पूर्ववद्वृताचार्यःसर्वतोभद्रस्थकलशेसाक्षतपूर्णपात्रेषट्कोणं पद्मंविलिख्य तत्रमध्येहैमंरामंषडक्षरेण त्रयोदशाक्षरेणवामूलमंत्रेण ॥ मूलमंत्रस्तु ॥ रामरामरामेतिषडक्षरमंत्रः ॥ श्रीरामजयरामजयजयरामेतित्रयोदशाक्षरः ॥ वैदिकस्तु-भद्रोभद्रयासचमानआगादिति ॥ तद्वामतोहैमींसीतांजनकात्मजायैनम इति नाममंत्रेणचप्रतिष्ठाप्य ॥ परितःषट्कोणेषुक्रमेण ॥ दशरथंकौसल्यांलक्ष्मणंभरतंशत्रुघ्नंमारुतिंच नाममंत्रैःप्रतिष्ठाप्यपुरुषसूक्तेनपूजयेत् ॥ पुष्पोत्तरमंगपूजा ॥ श्रीरामचंद्रायनमः पादौपूजयामि ॥ एवंसर्वत्र ॥ राजीवलोचनाय० गुल्फौ० रावणांतकाय० जानुनी० विश्वामित्रप्रियाय० नाभिं० परमात्मने० हृदयं० श्रीकंठाय० कंठं० सर्वास्त्रधारिणे०बाहू० विश्वमूर्तये० मुखं० पद्मनाभाय०जिह्वां० दामोदराय० दंतान्० सीतापतये० ललाटं० ज्ञानगम्याय० शिरः० सर्वात्मने० सर्वांगंपू० ॥ नमस्कारमंत्रः ॥ नमोदेवाधिदेवायरघुनाथायशार्ङ्गिणे ॥ चिन्मयानंदरूपायसीतायाः पतयेनमः ॥

इति ॥ अर्घ्यमंत्रः ॥ दशाननवधार्थायधर्मसंस्थापनायच ॥ राक्षसानां विनाशायदैत्यानांनिधना यच ॥ परित्राणायसाधूनांजातोरामःस्वयंहरिः ॥ गृहाणार्घ्यंमयादत्तंमात्रादिसहितोऽनघ ॥ इति ॥ ततः पुराणपठनादिनारात्रिंनिनयेत् ॥ प्रातरग्निप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानम् ॥ राममा ज्यपायसद्रव्येणप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः मूलमंत्रेण जानक्यादिसप्तदेवताःउक्तद्रव्येणाऽष्टा विंशतिसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ एवंहोमंसंपाद्य आचार्यंसंपूज्य प्रतिमांदद्यात् ॥ तत्रमंत्रः ॥ इमांस्वर्णमयींरामप्रतिमांसमलंकृताम् ॥ श्रीरामप्रीतयेदास्येप्रीतोभव तुराघवः ॥ इति ॥ ततोव्रतपूर्तयेगांचदत्त्वासदन्नेनब्राह्मणान्संतर्प्यदक्षिणादिभिःसंतोष्यआशिषोगृही त्वास्वयंभुंजीत ॥ इति रामनवमीव्रतोद्यापनम् ॥ अथ रामनामलेखनोद्यापनविधिर्भविष्ये ॥ उमांप्रति महादेववचनम् ॥ " रामनामलिखेद्यस्तुलक्षकोटिशतावधि । एकैकमक्षरंपुंसांमहापातकनाशनम् ॥ प्राप्नोतिपरमांसिद्धिंदीर्घायुःपुत्रसंपदम् ॥ " इति । तिथ्यादिसंकीर्त्यात्मनः अनेकपातकक्षयपूर्वक सकलमनोरथावाप्तिद्वाराश्रीरामचंद्रप्रीत्यर्थंमयालिखितंयत्कोटिलक्षावधिरामनामतत्फलसिद्ध्ये तदु द्यापनाख्यं कर्मकरिष्ये इति संकल्प्यपूर्ववद्वृताचार्यः सर्वतोभद्रस्थकलशे साक्षतपूर्णपात्रेषोडश

स्वदर्थंपरिकल्पिता ॥ इति ॥ लक्ष्मीमावाह्यषोडशदूर्वांकुरैः मालतीपुष्पकर्पूरचंदनादिभिः श्रीसूक्ते
नलक्ष्मीसूक्तेनवासंपूज्यप्रार्थयेत् ॥ धनंधान्यंधरांधर्मंकीर्तिमायुर्यशःश्रियम् ॥ तुरगान्दन्तिनःपुत्रान्म
हालक्ष्मिप्रयच्छमे ॥ विष्णोर्वक्षसिपद्मेचशंखेचक्रेतथांबरे ॥ लक्ष्मीदेवियथासित्वंगृहेक्षेत्रेतथावस ॥
इत्यनेनमंत्रेणदक्षिणकरे स्त्रियाःकंठे बद्ध्वा कथां श्रुत्वाभुंजीत ॥ एवंकृष्णाष्टमीपर्यंतंप्रत्यहंतदेवसूत्रंसंपू
ज्यधारयेत्॥कृष्णाष्टम्यां प्रातःवस्त्रगृहंरंगवल्ल्यादिभिर्युतंकृत्वातत्राष्टदलमिंद्रादिशक्तियुतंनिर्मायतत्रका
ष्ठमृच्चंदनादिभिश्चतुर्भुजांगजपृष्ठगतांमहालक्ष्मीमूर्तिंविरच्यतत्रपूर्ववन्नूतनंसूत्रंप्रतिष्ठाप्यपूजयेत् ॥ अथां
गपूजा ॥ चपलायैनमःपादौपू० चंचलायै० जानुनी० कमलवासिन्यै० कटिं० शांत्यै० नाभिं० मन्म
थवासिन्यै० स्तनौ० ललितायै० भुजद्वयं० कम्बुकंठ्यै०कंठं०मायायै० मुखं०श्रियै०शिरः०समायै०
सर्वांगंपू० ॥ पूर्ववत्संपूज्यप्रार्थ्यतन्नूतनसूत्रंपूर्ववद्धृत्वाषोडशनमस्कारान्कृत्वाजीर्णदोरकम् ॥ महाल
क्ष्मिगृहाणत्वंदोरकंयन्मयाधृतम् ॥ उत्तीर्यदोरकंबाह्वोर्लक्ष्मीपार्श्वेनिवेदयेत् ॥ ततोब्राह्मणान्संपूज्य
शूर्पेषोडशदीपान्षोडशगोधूमलड्डुकांश्चनिधायदद्यात्॥चतुर्द्वादशसंख्याकान्दीपान्पिडान्घृतप्लुतान्।
गृहाणत्वंद्विजश्रेष्ठवायनंप्रीतयेश्रियः ॥ ततश्चंद्रोदयेसतिचंद्रंसंपूज्यअर्घ्यंदद्यात् ॥ नमस्तेस्तुनिशानाथ

लजलान्यादाय ॐ अद्याशौचान्तद्वितीयेह्नि अमुकगोत्रस्यपितुरमुकप्रेतस्यस्वर्गप्राप्तिकामोद्विजदम्प तिपूजनमहंकरिष्येइतिसंकल्प्य द्विजदम्पतीपूजयेत्।तत्रक्रमः। ॐद्विजदम्पतिभ्यांनमः एषोऽर्घः।ॐद्विज दम्पतिभ्यांनमःइदमनुलेपनम् ॐद्विजदम्पतिभ्यांनमइत्युभयोःपादयोस्त्रिःपूजांकुर्यात्।ततः पुष्पजला भ्यामेतानिधूपदीपनैवेद्यताम्बूलविभूषणवासांसि द्विजदम्पतिभ्यांनमइतिदद्यात्। तौनमस्कुर्यात्। एतच्चद्विजदम्पतिपूजनं प्रधानत्वात् वृषोत्सर्गाकरणेऽपिकर्तव्यं शय्यादानवदिति॥अथवृषोत्सर्गप्र योगः॥ तत्र वृषोत्सर्गसंभृतिंविविक्तवनेगोमध्येप्रागुदकप्रवणंदेशंनयेत् ततआचान्तः। पूर्वाभिमुखउप विश्य कुशत्रयतिलजलान्यादाय ॐ अद्याशौचान्तद्वितीयेह्नि अमुकगोत्रस्यपितुरमुकप्रेतस्यमोक्षका मःसोपकरणवत्सतरीचतुष्टयसहितवृषोत्सर्गमहंकरिष्ये इति संकल्पंकुर्यात्। नीलवृषप्राप्तौनीलपदप्र क्षेपः कर्तव्यः। कार्त्तिक्यांवृषोत्सर्गे ॐ अद्यकार्त्तिक्यांतिथौ अमुकगोत्रस्यपितुरमुकशर्मणोमोक्षका मोऽपूपान्दत्त्वासोपकरणवत्सतरीचतुष्टयसहितवृषोत्सर्गमहंकरिष्ये इतिसंकल्पयेदितिविशेषः। वत्स तर्य्यष्टकपक्षेचतुष्टयपदस्थानेऽष्टकपदप्रक्षेपः। ततउत्तराभिमुखंब्राह्मणमुपवेश्य ॐ अद्यामुकगो

त्रस्यपितुरमुकप्रेतस्यकर्तव्यवृषोत्सर्गाङ्गभूतहोमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममुक शर्माणंब्राह्मणमेभिः पुष्पचन्दनताम्बूलवस्त्रयुगहेमालंकरणैर्ब्रह्मत्वेनत्वामहंवृणे इतिब्रह्माणंवृणुयात्। ॐ वृतोस्मीतिप्रतिवचनम् । ॐ यथाविहितंकर्मकुरु इतियजमानस्तमुद्दिश्यवदेत् । ॐ करवाणीतितत्प्रतिवचनम् । ततः ॐ अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यकर्तव्यवृषोत्सर्गांगभूतहोमकर्मकर्तुममुकशर्माणंब्राह्मणमेभिः पुष्पचन्दनताम्बूलहेमालंकरणवासोभिर्होतृत्वेनत्वामहंवृणे इत्याचार्यंवृणुयात् । ॐ वृतोस्मीतिप्रतिवचनम् । ॐ यथाविहितंकर्मकुरु इतियजमानस्तमुद्दिश्यवदेत् । ॐ करवाणीतितत्प्रतिवचनम् । ततो होता आचान्तो गोमयोपलिप्तवेदिकायांप्राङ्मुख उपविश्य पुरतः कुशैर्हस्तमात्रंचतुरस्रस्थण्डिलं परिसमुह्य कुशानैशान्यांक्षिप्त्वागोमयोदकेनोपलिप्य मध्यैप्रादेशमात्रमुत्तरक्रमेणस्रुवमूलेनत्रिरुल्लिख्य उल्लेखनक्रमेणदक्षिणस्यांगुष्ठानामिकाभ्यांसंगताग्राभ्यांमृदमुद्धृत्यऐशान्यांतांक्षिप्त्वा तंदेशंजलेनाभ्युक्ष्यतत्रदक्षिणहस्तस्थकांस्येनतूष्णीमग्निंस्थापयेत् । अग्नेर्दक्षिणतःपरिस्तरणभूमिमतिक्रम्यशुद्धमासनमुपकल्प्य तत्रप्रागग्रकुशैःपरिस्तर

णंविधाय ब्रह्माणमग्नेर्वायव्याःप्रदक्षिणमानीयकल्पितासनेबर्हिर्हस्तमुदङ्मुखमुपवेशयेत् । ततोऽग्नेरुत्त
रतः परिस्तरणभूमिमतिक्रम्यकुशत्रयमास्तीर्य तत्रसान्तरालमृत्पात्रस्थंबर्हिषाच्छादितंसर्वकार्यार्थमुद
कंक्षीरंच ब्रह्ममुखमवलोक्यनिदध्यात् । ततउपमूलबर्हिषामुष्टिचतुर्थभागेनाग्नेयादीशानान्तंप्राच्यां
ब्रह्मणोग्निपर्यन्तं दक्षिणस्यां नैर्ऋताद्वायव्यान्तं पश्चिमायामग्नितःप्रणीतापर्यन्तमुत्तरस्यांस्तरणंकुर्या
त् । ततआसादनमुपयोक्ष्यमाणानामग्नेरुत्तरतःप्रणीतापश्चिमेप्राक्संस्थंवा।तद्यथापवित्रच्छेदनार्थंकुश
त्रयंपवित्रार्थमनन्तर्गर्भितंसाग्रकुशपत्रद्वयंप्रोक्षण्यर्थंमृत्पात्रमाज्यार्थंताम्रस्थालीपायसचर्वर्थंमृत्तिका
स्थालीध्रुवसंमार्जनार्थंकुशत्रयमुपयमनार्थंवेणीरूपंकुशत्रयंप्रादेशमितपलाशसमित्त्रयंस्रुवः आज्यंतण्डु
लान् दुग्धमिति । एवमासाद्यतदुत्तरतः पौष्णंसिद्धमेवपिष्टमयचरुंब्रह्मदक्षिणार्थंपूर्णपात्रंहोतृदक्षिणार्थं
वस्त्रयुग्मसुवर्णकांस्यान्युपकल्पयेत्। ततो वाग्यत आसादितकुशपत्रद्वयमादायपवित्रच्छेदनकुशैःप्रादे
शमात्रंप्रमाप्यच्छिन्द्यात् । तानपास्यपवित्राभ्यांप्रणीतोदकमुत्पूय सपवित्रः करेणप्रणीतोदकंत्रिःप्रोक्ष
ण्यांनिधायउदगग्रेपवित्रेन्यस्तहस्तयोरंगुष्ठानामिकाग्राभ्यामनयोरादाय तन्मध्येनप्रोक्षण्युदकंभूमौत्रिः

दाय ॐअद्याशौचान्तद्वितीयेह्निअमुकगोत्रस्यपितुरमुकप्रेतस्यस्वर्गप्राप्तिकामइमांसोपकरणांशय्यांवि
ष्णुदैवत्यामसुकगोत्रायासुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददेइतिदद्यात्। ॐस्वस्तीतिप्रतिवचनम्।ततः
कुशत्रयतिलजलानिदक्षिणाद्रव्यंचादायॐ अद्यकृतैतत्सोपकरणशय्यादानप्रतिष्ठार्थमिदंहिरण्यमग्निदै
वत्यममुकगोत्रायासुकशर्मणेब्राह्मणाय दक्षिणांचतुभ्यमहंसंप्रददेइतिदद्यात्।ततःप्रतिग्रहीताॐस्वस्तीति
प्रतिवचनमुक्त्वासोपकरणांशय्यांसंस्पृशेत्।तत आचम्य ॐफलवस्त्रसमन्वितकाञ्चनपुरुषायनमःॐब्रा
ह्मणायनमः इतिदेयब्राह्मणंत्रिःसंपूज्यॐइमंफलवस्त्रसमन्वितकाञ्चनपुरुषंददानीतिद्विजकरेजलदानम्।
वारिणादेयद्रव्यसेचनम्। कुशत्रयादीन्यादाय ॐअद्याशौचांतद्वितीयेह्निअमुकगोत्रस्यपितुरसुकप्रेतस्य
स्वर्गप्राप्तिकामइदंफलवस्त्रसमन्वितकाञ्चनपुरुषंविष्णुदैवतमसुकगोत्रायासुकशर्मणेब्राह्मणायतुभ्यमहं
संप्रददेइतिदद्यात्। ॐस्वस्तीतिप्रतिवचनम्।ततोहिरण्यदक्षिणाद्रव्यमादाय ॐअद्यकृतैतत्फलवस्त्रसम
न्वितकाञ्चनपुरुषदानप्रतिष्ठार्थमिदंहिरण्यमग्निदैवत्यम् असुकगोत्रायासुकशर्मणेब्राह्मणाय दक्षिणांचतु
भ्यमहंसंप्रददेइतिदद्यात्।ततःप्रतिग्रहीता ॐस्वस्तीत्युक्त्वाकांचनपुरुषंस्पृशेत्। ततआचम्यकुशत्रयति

रुत्तरतःपूर्वसिद्धपिष्टकचरुंनिधायहोमसमाप्तिपर्यन्तमुपग्रहार्थंकुशैर्वामहस्तेउपग्रहंविधाय प्रजापतिंम
नसाचिन्तयन्नुत्तिष्ठन् प्रागग्रघृताक्तसमिद्द्वयंवह्नौप्रक्षिप्योपविश्यप्रोक्षण्यद्भिःसहविष्कमग्निंप्रणीताब्रह्म
सहितंपर्युक्ष्यपवित्रेप्रणीतासुनिधाय प्रोक्षणीपात्रंस्वस्थानेनिदध्यात् । ततोब्रह्मणाकरबर्हिषान्वारब्धो
दक्षिणजानुंनामयित्वासंस्रवंविनैवाज्येनजुहुयात् । स्वाहान्तोहोमः इदमग्नयेइतित्यागः । ॐ इहरतिः
स्वाहा इदमग्नये० १ ॐ इहरमध्व स्वाहा इदमग्नये० २ ॐ इहधृतिःस्वाहा इदग्नये० ३
ॐ इहस्वधृतिस्वाहाइदमग्नये० ४ ॐ उपसृजंधरुणंमातरंमात्रधरुणोमातरंधयन्स्वाहा इदम
ग्नये० ५ ॐ रायस्पोषमस्मासुदीधरत्स्वाहा इदमग्नये० ६ ततःप्राक्ऋज्वग्नेर्दक्षिणभागे
मनसा ॐ प्रजापतयेस्वाहा इदंप्रजापतये० १ अग्नेरुत्तरभागेऋजुप्राक् ॐ इन्द्रायस्वाहा
इदमिन्द्राय० २ ततउत्तरपूर्वार्द्धे ॐ अग्नयेस्वाहा इदमग्नये० १ दक्षिणपूर्वार्द्धे ॐ सोमायस्वाहा
इदंसोमाय० २ इत्याघारावाज्यभागौचसंस्रवंहुत्वापायसंपैष्टकमेकंचादाय समिद्धतमेऽग्नौसंस्रवं
विनैवपायसेनजुहुयात । ॐ अग्नयेस्वाहा इदमग्नये० ॐ रुद्रायस्वाहा इदंरुद्राय० २ ॐ शर्वाय

स्वाहा इदंशर्वाय॰ ३ ॐ पशुपतयेस्वाहा इदंपशुपतये॰ ४ ॐ उग्रायस्वाहा इदमुग्राय ५
ॐ उशनसेस्वाहा इदमुशनसे॰ ६ ॐ भवायस्वाहा इदंभवाय॰ ७ ॐ महादेवायस्वाहा इदंमहादे
वाय॰ ८ ॐ ईशानायस्वाहा इदमीशानाय॰ ९ इतिहुत्वा पिष्टकेन ॐ पूषागाऽअन्वेतुनःपूषारक्ष
त्वर्व्वतः ॥ पूषावाजा ꣳसनोतुनःस्वाहा इदंपूष्णे॰ १ततःपायसपिष्टकाभ्यामुत्तरार्द्धावदानभूताभ्याम्
ॐ अग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृते॰ अग्नेर्मध्यभागे तत् आज्येन ॐ भूःस्वाहा इदम
ग्नये॰ १ ॐ भुवःस्वाहाइदंवायवे॰ २ ॐ स्वःस्वाहा इदंसूर्याय॰ ३ ॐ त्वन्नोऽअग्नेव्वरुणस्यव्विद्वा
न्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोव्वह्नितमः शोशुचानोव्विश्श्वाद्द्वेषा ꣳसिप्रमुमुग्ध्यस्मत्
स्वाहा इदमग्नीवरुणाभ्यां॰ ४ ॐ सत्वन्नोऽअग्नेव्वमोभवोतीनेदिष्ठोअस्याऽउषसोव्युष्टौ ॥ अवयक्ष्व
नोव्वरुण ꣳ रराणोव्वीहिमृडीक ꣳ सुहवोनऽएधिस्वाहा इदमग्नये॰ ५ ॐ अयाश्चाग्नेस्यनभिशस्ति
पाश्चसत्वमित्वमयाअसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेषज ꣳ स्वाहा इदमग्नये॰ ६ ॐ येतेशतं
व्वरुणयेसहस्रंयज्ञियाःपाशाव्विततामहान्तः ॥ तेभिर्नोऽअद्यसविनोत्तव्विष्णुर्व्विश्श्वेमुञ्चन्तुमरुतः

स्वर्क्काः स्वाहा इदंवरुणाय सवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यः स्वर्केभ्योनमम ७ ॐउदुत्तमंव्वरुण पाशमस्स्मदवाधमंविमद्ध्यम २ श्रथाय॥अथावयमादित्यव्व्रतेतवानागसोऽअदितयेस्यामस्वाहा इदं वरुणाय०८ ॐ प्रजापतयेस्वाहा० इदंप्रजापतये० ९ इतिमनसा । एवंहुत्वा संस्रवप्राशनमाचमनंचकृ त्वा पवित्राभ्यांशिरःप्रभृतिसंमार्जनम् । ॐ सुमित्रियानआपऽओषधयःसन्त्वितिमन्त्रेण । ततः ॐ दुर्म्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चव्वयन्द्विष्मइतिमन्त्रेणप्रणीतोदकमैशान्यांनिनयेत् । ततः फलपुष्पान्वितघृतेन ॐमूर्द्धानंदिवोऽअरतिम्पृथिव्याव्वैश्वानरमृतआजातमग्निम्॥ कवि २ सम्राजमति थिंजनानामासन्नापात्रंजनयन्तदेवाः स्वाहा इदमग्नये० इतियजमानसहितहोतापूर्णाहुतिंकुर्य्यात् । ततःस्तरणक्रमेणबर्हिरुत्थाप्याज्येनाभिघार्य्य ॐ देवागातुव्विदोगातुंव्वित्त्वागातुमितमनसस्पतऽइमं देवयज्ञ २ स्वाहाव्वातेधाः स्वाहा इदमग्नये०इतिबर्हिर्होमंहस्तेनैवकुर्य्यात्। ततो यजमानःकुशत्रयतिल जलान्यादाय ॐ अद्यकर्तव्यवृषोत्सर्गांगभूतकृतैतद्धोमकर्मणिकृतावेक्षणरूपब्रह्मकर्म्मप्रतिष्ठार्थमि दम्पूर्णपात्रंप्रजापतिदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायब्रह्मणे दक्षिणांचतुभ्यमहंसंप्रददे इतिब्रह्मणे

क्षिप्त्वापवित्रेप्रोक्षण्यांनिधाय तत्पात्रंदक्षिणहस्तेनादायवामेनिधाय दक्षिणहस्तानामिकांगुष्ठाभ्यांतज्ज
लंकिञ्चिदूर्ध्वंमुत्क्षिप्यप्रणीताजलेनप्रोक्षणीमभिषिच्य तज्जलेनयथासादितंद्रव्यंप्रत्येकंसकृत्प्रोक्ष्यपवि
त्रशेषजलसहितपात्रंप्रणीताग्न्योरन्तरेनिधाय आज्यस्थाल्यामाज्यंनिरूप्य चरुस्थाल्यांतण्डुलान्निः
क्षिप्य प्रणीतोदकेनतांस्त्रिःप्रक्षाल्यतत्रप्रणीतोदकंदुग्धञ्चप्रक्षिप्य स्वयंचरुं ब्रह्मणाचाज्यंगृहीत्वा प्रदक्षि
णीकृत्याऽग्निपूर्वेणनीत्वादक्षिणतआज्यमुत्तरतःपायसंचरुं श्रपणार्थं युगपदग्नौनिधाय उल्मुकंसहवि
ष्काग्नेःप्रदक्षिणंभ्रामयित्वा तत्रैवक्षिप्त्वा स्रुवस्यप्रागग्रस्यावाङ्मुखस्याग्नौप्रतपनमुत्तानस्यसंमार्जनंकु
शैरभ्यन्तरतोऽग्रान्मूलपर्यन्तंमध्यैर्मध्यतएव मूलैर्बाह्यतो मूलादग्रपर्यन्तंसंमार्जनं प्रणीताद्भिरभ्युक्ष
णंपुनःप्रतपनम् आस्तृतबर्हिषिस्वपुरतः प्रागग्रस्यस्थापनंविधाय ततः पाकेवृत्तेस्वयमाज्यमुद्वास्या
ग्निपश्चिमेननीत्वा प्रणीतोत्तरतोनिधाय ततःपायसचरुमुद्वास्याज्यपश्चिमेननीत्वा आज्यस्योत्तरतो
निधायस्वपुरतःस्रुवोत्तरेआज्यंतदुत्तरतश्चरुंनिधाय प्रोक्षणीतःपवित्रेसमानीय आज्येप्रोक्षणीवदुत्प
वनंकृत्वा पवित्रेप्रोक्षण्यांनिधाय आज्यमवेक्ष्यसत्यपद्रव्येतन्निरस्य प्रोक्षण्युत्पवनंविधाय पायसचरो

सादिरहितमुपोषणंकार्यम् ॥ अशक्तश्चेद्दुग्धफलादिभक्ष्यम् अत्यंताशक्तश्चेद्धविष्यान्नम् ॥ प्रातःदेवींसं पूज्यसपत्नीकंब्राह्मणंसंपूज्यपंचफलान्वितंवायनंसोपस्करंदद्यात् । तत्रमंत्रः ॥ गौर्यादुःखविनाशिन्या व्रतसंपूर्ति हेतवे ॥ वायनंद्विजवर्यायसहिरण्यंददाम्यहम् ॥ इति दत्त्वादेवींविसर्ज्यपीठंदत्त्वात्रिभ्यो धिकान्द्विजान्संतर्प्यभुंजीत ॥ इति श्रीमच्छङ्करविरचितायांव्रतोद्यापनकौमुद्यांनवमीव्रतानि ॥ छ ॥

अथदशमीव्रतानि ॥ तत्रशुभमासस्ययस्यांकस्यांचिच्छुक्लदशम्यामाशादशमीव्रतं हेमाद्रौभविष्योत्तरे ॥ तिथ्यादिसंकीर्त्यात्मनः अखिलमनोरथावाप्तिपूर्वकदशाशास्वरूपिपरमेश्वरप्रीत्यर्थमाशादशमीव्रतंक रिष्ये इतिसंकल्प्य नक्तंगोमयेनोपलिप्तगृहांगणेयवैःपिष्टातकेनवास्त्रीरूपाःदशाशास्वरूपाः पुत्तलिकाः विलिख्यतत्रइंद्रादीनायुधवाहनादियुतांस्तत्तन्मन्त्रैः नाममंत्रैर्वासंपूज्यघृताक्तंनैवेद्यंभक्ष्यभोज्यादियुतं दीपांश्चपृथक्पृथग्दापयित्वाकालोद्भवानिफलानिचसमर्प्यप्रार्थयेत् ॥ आशास्त्वाशाःसदासंतुसिध्यं तांमेमनोरथाः ॥ भवतीनांप्रसादेनसदाकल्याणमस्तु नः ॥ ततोविप्रंसंपूज्यदक्षिणांदत्त्वाब्राह्मणभोजन पुरःसरंस्वयंभुंजीत ॥ अनेनक्रमयोगेनमासिमासिसमाचरेत् ॥ वर्षांतेचकुरुश्रेष्ठउद्यापनविधिंचरेत् ॥ उद्यापनंकरिष्यइतिसंकल्प्यवृताचार्यः सर्वतोभद्रेब्रह्मादिदेवताआवाह्यतत्राक्षतपुंजेषुसौवर्णीः रौप्यावा

